अथोदितः कर्मसु कर्मणां तु यः सम्बन्ध इष्टः स विभिन्नलक्षणः ।
तयोर्विवेकाय पृथक् पृथक् पुनः सम्बन्धभेदानिह दर्शयाम्यहम् ॥१२॥

## २—कर्म्मणि कर्म्मसंबन्धाः पञ्चविधाः ।

कर्मान्वयः कर्मणि पञ्चधा स्यात् स्थानावरोधेन[1] समञ्जसेन[2] ।
ऐकात्म्यरूपेण[3] तथैकभाव्यरूपेण भक्त्या[5] च विशेषसर्गे ॥१॥

(१) जलेन पूर्णे न जलं मृदा न मृत्स्थितेर्विरोधान्मणिके[1] निवेश्यते ।
स्थानाच्छ्लथाणोरपसर्पणात् त्वसौ शङ्कुर्निखातः क्षितिभित्तिदारुषु ॥२॥
(२) समञ्जसत्वात्तु गृहे प्रकाशे दीपप्रकाशाः शतमाभवन्ति ।
दीपेषु भूयस्स्वधिकावकाशाऽवगाहिभासोऽपि स देशवृत्तेः ॥३॥
यद्दर्पणे चक्षुषि चाल्पदेशे तेजांसि रूपाणि पृथग्विधानि ।
दिग्भ्यः समागत्य पृथग्विधाभ्यः सहैव तिष्ठन्ति समञ्जसं[2] तत् ॥४॥
विचाल्यमानं हि बलेन केनचिद् विरुद्धदिग्लब्धबलान्तराश्रयात् ।
स्थिरीभवेत् तत्र विरुद्धदिग्भवं बलद्वयं तद् युगपत् सहाश्नुते[2] ॥५॥
(३) अयोग्निना, चूर्णमथाम्बुना, धृतेरैकात्म्यमायाति[3], मृदग्निपाचिता ।
(४) तेजोम्बुनोस्ते परमाणवो नवं जलाणुभावं[4] जनयन्ति योजिताः ॥६॥
(५) अनिर्बले दिग्द्वयभित्तिकीलावलम्बितप्रान्तयुगे तु सूत्रे ।
सूत्राद्बलिष्ठं ध्रियतेऽवलम्ब्यं वस्त्रादि तद्भुक्तिबलस्य भक्त्या[5] ॥७॥
महोन्नतं चापि महाबलिष्ठं कपाटमावर्तयते कृशोऽपि ।
लोष्टेन कीलेन च रुद्ध्यते तत् तत्राबलं तत् प्रबलस्य भक्तम्[5] ॥८॥
यो दुर्बलोऽप्येकजनो बलिष्ठान् राजाऽऽज्ञयाऽऽक्रामति भूयसोऽपि ।
तन्न्यायसिद्धान्तविरोधिनो वा तत्राबलं तत् प्रबलस्य भक्तम्[5] ॥९॥
गच्छत्यगच्छन् शिविकास्थितो नरस्तद्भुक्तिभूतः[5] शिविकागतिक्रमात् ।
इतीदृशे पञ्चविधेऽपि वान्वये स्थानावरोधोऽभिमतः प्रधानतः ॥१०॥
यः कर्मणो ब्रह्मणि संभवो न स स्थानावरोधाय कदापि जायते ।
पूर्णे रसेऽपूर्णबलं यतस्ततस्तादात्म्यरूपेण युनक्ति सर्वतः ॥११॥

## ३–ब्रह्मणि कर्म्मसंबन्धास्त्रयोदशविधाः १३ ।

❀शश्वद्धिते ब्रह्म च कर्म्म च द्वे तयोश्च सम्बन्ध उदेति शश्वत् ।
द्वयं विशिष्टाद्वयमेतदेवं सम्बद्धरूपं ध्रियतेऽपि शश्वत् ॥१॥
सम्बन्धभेदास्तु रसे बलस्य त्रयोदशाहुः किल तान् वदामः ।
[१]अलक्षणं चाथ [२]विभूति[३]योगौ [४]बन्धो[५]ऽमिता [६]वृत्तिरुदारवृत्तिः ॥२॥
स्यात्सप्तमीयं [७]समवायवृत्तिरा[८]सङ्गवृत्तिः पुनरष्टमी स्यात् ।
[९]अध्यूढ[१०]सन्धी [११]दहरोत्तरत्वौ[१२]तप्रोतभावौ च [१३]ग्रहोद्ग्रहत्वम् ॥३॥

## ४–त्रयोदशविधानां सम्बन्धभेदानां स्वरूपवृत्तित्वाभ्यां विभागः ।

अन्योन्यमेते परिवर्त्तिताः स्युस्तेषाममीषां परिवर्तनं यत् ।
आकस्मिकं तन्न फलान्न कामात् स्वभाव एवात्र परं निदानम् ॥४॥
स्वरूपसम्बन्धविधाश्च[४]तस्रो वृत्तित्वसम्बन्धविधास्ततोऽन्याः ।
पर्य्याप्तिवृ[४]त्तित्वविधाश्चतस्रोऽन्वाभक्तिवृत्तित्व[५]विधास्तु पञ्च ॥५॥
उद्भावकं स्यात् पुरुषप्रकृत्योः [४]स्वरूपमायोजकमेतयोः स्यात् ।
[४]पर्याप्तिवृत्तित्वमथैवम[५]न्वाभक्तिस्तु पुंसोरिह सन्धिहेतुः ॥६॥
अन्तःप्रवेशादविविक्ततायां स्वरूपसम्बन्ध इति प्रसिद्धिः ।
विविक्तभावेन तयोः प्रतीतौ वृत्तित्वसम्बन्धमुदाहरन्ति ॥७॥

❀ ब्रह्मणि कर्म्मसम्बन्धास्त्रयोदश १३

| स्वरूपसंबन्धाः ४ | | | पर्य्याप्तिवृत्तित्वसंबन्धाः | | | अन्वाभक्तिवृत्तित्वसंबन्धाः | | |
|---|---|---|---|---|---|---|---|---|
| १ | अलक्षणम् | असंसर्गः | १ | अमित-वृत्तित्वम् | असंसर्गः | १ | सन्धिः | असं० |
| २ | विभूतिः | संसर्गः | | | | २ | दहरोत्तरत्वम् | ,, |
| ३ | योगः | संसर्गः | २ | उदारः | संसर्गः | ३ | ओतप्रोतत्वम् | ,, |
| ४ | बन्धः | संसर्गः | ३ | आसङ्गः | संसर्गः | ४ | ग्रहातिग्रहत्वम् | ,, |
| | | | ४ | समवायः | संसर्गः | ५ | अध्यूढत्वम् | ,, |

## ५–तेषां पुनः संसर्गासंसर्गाभ्यां विभागः ।

※ अपूर्वसृष्टिर्यदि चेदुभाभ्यां संसर्ग उक्तः स समन्वयोऽपि ।
षडत्र संसर्गविधाः स्युरेवं सप्तत्वसंसर्गविधाः स्युरन्याः ॥१॥
बन्धश्च योगश्च विभूतिनामाऽऽसङ्गोऽप्युदारः समवाय इत्थम् ।
त्रिधा स्वरूपं त्रिविधा च वृत्तिः संसर्गसम्बन्धविधाः षडेताः ॥२॥
अलक्षणे चामितवृत्तितायामध्यूढसन्ध्यादिकपञ्चके च ।
न सर्गक्लृप्तिर्न च मोक्षक्लृप्तिस्तस्मादसंसर्गविधाः स्युरेताः ॥३॥

## ६–स्वरूपसंसर्गाणां वृत्तित्वसंसर्गाणां च परिभाषा ।

बलं रसे ब्रह्मणि चोत्थितं पतन्निलीयते तत्र पुनर्विजायते ।
तत्र स्वरूपेण निलीयते पुनः समुत्थितं वृत्तितयाऽनु सज्जते ॥४॥
यत्रोदयं याति बलं तु तद्रसे संसर्ग एतस्य विधीयते नहि ।
बलान्तरेणोपहिते रसान्तरे बलान्तरं याति समन्वयः स हि ॥५॥
रसो रसेनैक्यमुपैति चेद्बलं बलेन भूयोऽप्युभयं यदेकताम् ।
तदा स्वरूपं प्रथते ततोऽन्यथा वृत्तित्वमेवेति मुहुर्विचिन्त्यताम् ॥६॥
बलप्रवाहं प्रथमप्रवृत्तं यदोपमर्द्यानुपमर्द्य वाऽस्मात् ।
प्रवर्ततेऽन्यः प्रबलः प्रवाहः संसर्गसम्बन्धगतिस्तदा स्यात् ॥७॥

## ७–अलक्षणमसंसर्गः स्वरूपसम्बन्धः ।

स्वरूपसम्बन्धगतिर्द्विधा स्यान्मृत्युप्रसुप्त्याऽमृतमृत्युभुक्त्या ।
स्वापे बलं स्यात्तु रसस्वरूपं बलस्वरूपस्तु रसो न तेन ॥८॥

※ ब्रह्मणि कर्म्मसंबन्धास्त्रयोदश १३

| | | | | | |
|---|---|---|---|---|---|
| १ | बन्धः | स्वरूप–संसर्गाः ३ | १ | अलक्षणम् | असंसर्गः स्वरूपसंबन्धः १ |
| २ | योगः | | २ | अमितवृत्तिता | असंसर्गः पर्य्याप्ति-वृत्तित्वम् १ |
| ३ | विभूतिः | | ३ | अध्यूढभावः | असंसर्गः अन्वाभक्तिवृत्तित्वं ५ |
| ४ | आसङ्गः | पर्य्याप्ति—वृत्तित्व–संसर्गाः ३ | ४ | ग्रहातिग्रहभावः | ,, |
| ५ | उदारः | | ५ | ओतप्रोतभावः | ,, |
| ६ | समवायः | | ६ | दहरोत्तरभावः | ,, |
| | | | ७ | संहिता (सन्धिः) | ,, |

सुप्त्वा न जागर्ति रसो न शेते ततो रसो नास्ति बलस्वरूपः ।
जागर्ति निद्राति बलं ततस्तत् सुप्तं भवत्येव रसस्वरूपम् ॥६॥

प्रस्वापतो यत्र भवेत् स्वरूपमलक्षणं तन्न च तत्र सर्गः ।
अन्योन्यभोगात्तु तयोः स्वरूपे समन्वयोऽस्तीह ततोऽस्ति सर्गः ॥१०॥

## ८-अलक्षणसम्बन्धोदाहरणानि ।

यथास्ति पादे गतये बलं करे तत्क्षेपणायास्ति बलं तथा मुखे ।
वक्तुं बलं किन्तु न सर्वदा ततः कार्य्याणि लोके, तदलक्षणं बलम् ॥१॥

यथात्र बीजेऽस्ति कुटाङ्कुरोद्भिदे रसानिहाकृष्य निरन्तरं क्रमात् ।
स्कन्धप्रशाखाविटपादिभूतये बलं तथाप्यद्य तदस्त्यलक्षणम् ॥२॥

इहावकाशेऽस्ति तमस्तथेह च्छाया तथेहातप एष इत्थम् ।
लक्ष्यन्त एते हि दिवावकाशा नक्तं तदाकाशमलक्षणं स्यात् ॥३॥

तथा विशुद्धेऽस्त्यमृते स मृत्युः सुप्तस्ततोऽव्यक्ततयास्त्यलक्ष्यः ।
वैविध्यतो लक्षयतेऽमृतं यः स नास्ति तेनामृतमप्यलक्ष्यम् ॥४॥

तदन्तरे तत्परितो बहिर्धाऽऽहितं हि मृत्यावमृतं समन्तात् ।
तत्रास्य मृत्योरमृतं स्वरूपं सर्वाविविवतं तदलक्षणं स्यात् ॥५॥

अलक्षणं तज्जगतोऽस्य रूपमाद्यं ततो लक्ष्यमिदं जगत् स्यात् ।
नाना जगन्ति प्रभवन्ति तेषामन्यान्यकालाः प्रलयोदयाः स्युः ॥६॥

## ९-संसर्गसम्बन्धे सम्बन्धिनोर्बीजयोनित्वाभ्यां विभागः ।

आधीयतेऽन्यत्र यदन्यदस्मिन्नभ्याहितं चेदुदरेऽन्तरेति ।
स्वरूपतस्तच्च्यवते तदानीं भुक्तं तदन्येन तदन्यदाहुः ॥१॥

अन्नादनं तद् द्विविधं क्वचिद्वा विस्रस्तभागप्रतिपूरणाय ।
ह्रदे प्रणालीहृतवारिपूर्त्यै वारिप्रणाल्याऽपरयाऽभ्युपैति ॥२॥

दीपार्चिषि स्रंसितभागपूर्ति करोति तैलं क्रमशः प्रविष्टम् ।
जीवोऽपि सर्वोऽन्नमिहात्ति तत् तद्विस्रस्तभागप्रतिपूर्तिहेतुः ॥३॥

अथ[२] क्वचिद्वा नववस्तुसृष्टयै तदन्नमन्नादसमन्वितं स्यात् ।
एकस्य पिष्टस्य विशेषयोगादन्यान्यवस्तूनि भवन्ति लोके ॥४॥

दुग्धे तदन्यान्यविशेषयोगादामिक्षिका वा दधि वा शरो वा ।
रसे तदन्यान्यबलप्रयोगात् परोऽक्षरो वा भवति क्षरो वा ॥५॥

तत्रेह सृष्टयर्थयुतिक्रमे यो भोगाय भोक्ता क्रमते स्वभोग्ये ।
स उच्यते तत्र वृषाऽथ योषा संज्ञायते भोग्यतया प्रतीता ॥६॥
संसृज्यते तत्र च यावदंशो वृष्णस्तमंशं कथयन्ति बीजम् ।
यावान् समन्वेत्यपि योषिदंशो योनिः स तावान् व्यपदिश्यतेऽत्र ॥७॥
मृत्युर्यदि स्यादशितोऽमृतेन स्वरूपसंसर्गत आत्मसृष्टिः ।
बलाशितेऽस्मिन्नमृते तु योनेः स्वरूपसंसर्गवशेन सृष्टिः ॥८॥
रसोऽयमात्मा पुरुषोऽथ तस्य तद्बलं तु योनिः प्रकृतिश्च कथ्यते ।
यावन्न जायेत समन्वयोऽनयोर्न तावदाभ्यां किमपीह सृज्यते ॥९॥
रसस्वरूपेण समन्विते बले कर्मात्मनः स्यात्पुरुषस्य संभवः ।
बलस्वरूपेण समन्विते रसे योनेः प्रकृत्या अपि संभवो नवः ॥१०॥

## १०–त्रयः संसर्गाख्याः स्वरूपसंबन्धाः ।

स्वरूपसंसर्ग इह त्रिधा स्याद् बन्धश्च योगश्च तथा विभूतिः ।
अनुग्रहादेव भवेद् विभूतिर्यत्कौशलं कर्मसु योग एषः ॥१॥
बन्धस्तु सङ्गातिशयादिह स्यादेभिस्त्रिभिः संस्त्रियते स आत्मा ।
त आत्मसर्गास्त्रिविधाः प्रसिद्धाः संसर्गनाशं तु वदन्ति मोक्षम् ॥२॥
ब्रह्मप्रधानः स विभूतिसर्गः कर्म्मप्रधानः पुनरेष बन्धः ।
द्वयोस्तु साम्ये भवतीह योगो विश्वं त्रिसंसर्गवशात् प्रवृत्तम् ॥३॥

## ११–विभूतिसंसर्गः । [१]

यत्र द्वयोरन्वितयोस्तु सर्गादेकं मृतं स्यादमृतं द्वितीयम् ।
स्वतन्त्रमेकं परतन्त्रमन्यच्चान्वेति नान्वेति विभूतिरेषा ॥१॥
यद्दर्पणे सन्निहितं मुखं, जपापुष्पस्य वर्णः स्फटिकेऽवभासते ।
तत्राहितोऽर्थो विभवन् स्वमाश्रयं स्वेनैव रूपेण तदाऽवभासयेत् ॥२॥
आवेशसत्त्वे तु विभूतिरिष्टा, नात्राविशत् नात्र विभूतिरेषा ।
उदारवृत्तिः कथितोपरागादत्रोपरागं हि वदन्ति वृद्धाः ॥३॥
यत्ताम्रतन्तौ ज्वलतीह विद्युद्, यदग्नितापोऽस्ति जलेऽनुतप्ते ।
याङ्गारखण्डेऽङ्गिरसः स्थितिः सा विभूतिरस्तीति समर्थयामः ॥४॥
यदिच्छतो यत्नवतः स्थिरः करः प्रतिष्ठतीह प्रचरत्यनेकधा ।
प्राणस्य प्रज्ञानुचरस्य सा करे विभूतिरन्तर्निहिताऽप्यलिप्तवत् ॥५॥

उत्क्षिप्यते लोष्टमथो शरस्तयो र्यदाहितं स्याद् बलमन्तरान्तरे ।
शरो बलेऽसौ बलमस्ति तच्छरे विभूतिरेषा न शरेऽनुषज्जते ॥६॥
न चेष्टका शुष्कमृदा भवेत् ततो जलात् करोतीह मृदं सुपेशलाम् ।
तयेष्टकासंपदि शोष्यते जलं शिवाग्निवायुर्विभवत्यथेष्टकाम् ॥७॥
न लोहखण्डद्वितयं परस्परं संसृज्यते तेन तदग्निना द्वयम् ।
सुपेशलं चेदपि सृज्यतेऽञ्जसा शिवाग्निवायुर्विभवत्यनुष्म तत् ॥८॥
गजाश्ववेश्माद्रिवनादयो यदा दृष्टौ स्मृतौ वा प्रतिभाति तत्र हि ।
विज्ञानमेकं विभवत्यनुक्रमादमीषु भूयो महिमस्वनेकधा ॥९॥

## १२—योगसंसर्गः । [२]

यत्र द्वयोरन्वितयोः स्वतन्त्रप्रवृत्तयोः कर्मणि साहचर्य्यात् ।
द्वियोगजं सृष्टमपूर्वमुद्यान्न चान्यतोन्यन्म्रियते स योगः ॥१०॥
प्राचीं प्रतीचीं च पृथक् पतत्रे पतत्रिणः संपततस्ततः स्यात् ।
गत्योर्द्वयोर्योगवशादुदीचीगतिर्विभिन्ना समकोणसिद्धा ॥११॥
यत्पाणिना पाणिरमुष्य घृष्यते बलाद् दृढोऽश्मा प्रतिहन्यतेऽश्मना ।
विरुद्धशक्तिद्वययोगतस्ततस्तदाऽनलश्चक्रगतिर्विजायते ॥१२॥
कृष्णोऽतिसूक्ष्मावरणोऽन्तराहितो बहिर्भवन् भास्वरशुक्ल ईक्ष्यते ।
रक्तः स वर्णस्तत एव शोणितो धूमाग्निरङ्गारशुचिः प्रगे रविः ॥१३॥
पीतेऽतिसूक्ष्मावरणेऽन्तराहितो बहिर्भवन् श्यामल ईक्ष्यते यदि ।
हरित् स वर्णस्तत एव शाखिनां पश्यन्ति पत्राणि हरीन्ति सर्वतः ॥१४॥

## १३—बन्धसंसर्गः । [३]

यत्र द्वयोरन्वितयोरपूर्वं द्वियोगजं सृष्टमुदेति किन्तु ।
अन्योन्यमन्योन्यहतं मृतं सत् पृथक् स्वतन्त्रं न भवेत् स बन्धः ॥१५॥
यथाप्सु वायुः प्लवते स खण्डशो यदोदकैराव्रियते स बुद्बुदः ।
न चावृतिस्त्रुट्यति चेत् तदोभयं संसृज्य बद्धं भवदेति फेनताम् ॥१६॥
दुग्धं प्रतप्तं यदि शीतवायुनाऽभिभूयते वायुरयन्तु बध्यते ।
दुग्धस्य वायोरपि बन्धनान्मिथः शरः समुद्भूय पृथग् विजायते ॥१७॥
अग्निः क्रमादुत्क्रमते रसान्नयन्, वायुः क्रमादन्तरुपैति संदधत् ।
वायोः स्वयोग्ये हि रसेऽनुबन्धनादयं रसस्तत्र शरः प्रजायते ॥१८॥

## १४—स्वरूप-संसर्गाणामुदाहरणम् ।

तृणेषु बन्धादिह[1] दुग्धमस्मिन् जलं विभूत्या,[2] द्रवताऽम्बु[3] योगात् ।
दुग्धे तृणं वृत्तिमदाहितं[4] चेदेकत्र संसर्गचतुष्कमित्थम् १६।।
स्वरूपसंसर्गिबलप्रबुद्धयात्मनः स्वरूपेऽस्य तथा स्वभावे ।
सक्तौ च वृत्तौ स्वयमेव भेदः प्रवर्तते तेन च वस्तुभेदः ।।२०।।

## १५—वृत्तित्वसंबन्धनिर्देशः ।

स्वरूपसंबन्धविधाश्चतस्रो रसे बलानामुदिता इतीत्थम् ।
सर्ग्या असर्ग्याश्च तथात ऊर्ध्वं वृत्तित्वसंबन्धविधाः प्रदर्श्याः ।।१।।
यत्राश्रितस्याश्रयतोऽन्वयेन संसृज्य नापूर्वमुदेति किञ्चित् ।
यत्राश्रितं स्वाश्रयनैरपेक्ष्यात् प्रवर्तते कर्मसु वृत्तिता सा ।।२।।
यथा हि पथ्यस्य जनस्य गच्छतः पन्था निमित्तं ध्रुवमाश्रयत्वतः ।
न चैवमप्येष गति-स्वरूपगो वृत्तित्वमेवं तदुदाहरन्ति हि ।।३।।
यथायमाकाशगतः समीरणो व्याप्नोति चाकाशमशेषदिक्ष्वपि ।
न वायुनाकाशमिदं विलिप्यते तथाखिलं स्याद्रसवृत्ति तद्बलम् ।।४।।

## १६—सामान्यवृत्तित्वम् । असंसर्गो वृत्तित्वसंबन्धः ।

रसे बलं सर्वबले रसो वा, सर्वोऽन्वितं रूपमिहास्ति शश्वत् ।
तयोर्न मात्रा नियमस्तदानीं सामान्यवृत्तित्वमिदं न सर्गः ।।५।।
यथा वने सन्ति मृगादिजन्तवो लुठच्चरा वा शतशः सहस्रशः ।
असद्भिरेतैर्न वनस्य हीयते वनं विनापि स्युरमी यतस्ततः ।।६।।
यथेह यच्च क्व च किञ्च लोके ब्रह्माण्डचक्रेऽखिलमेतदास्ते ।
सामान्यवृत्तित्वमिदं न तेभ्यो ब्रह्माण्डयोगादिह कोऽपि सर्गः ।।७।।

## १७—त्रयः संसर्गाख्या वृत्तित्वसंबन्धाः [३]

आसक्त्युदारौ समवाय इत्थं वृत्तित्वसर्गोपि भवेत् त्रिधैव ।
तेन स्वरूपत्रयमुक्तवृत्तित्रयं षडेतेऽमृतमृत्युसर्गाः ।।८।।
स्वरूपसंसर्गिबलादिहात्मा विधीयतेऽनेकविधः स भोक्ता ।
वृत्तित्वसंसर्गिबलात्तु भोक्तुस्तस्यात्मनो भोग्यमुपस्थितं स्यात् ।।९।।

## १८–उदारवृत्तित्वम् । संसर्गः [१]

बलस्य यस्यां रसवृत्तितायां सिध्यत्यसाधारणतैव तस्मिन् ।
निष्पन्दता वा रसलिप्तता वा न जायते सा तदुदारवृत्तिः ॥१०॥

यथायमाकाशगतः समीरो निर्लिप्त एव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेतः खभेदतस्तद्वदिहापि विद्यात् ॥११॥

यथा जलं पुष्करपत्रनिष्ठं निर्लिप्तमेव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेतं क्वचिद्भूतं तद्वदिहापि विद्यात् ॥१२॥

## १९–समवायवृत्तित्वम् । संसर्गः [२]

बलस्य यस्यां रसवृत्तितायां सिद्धयेदवष्टम्भ इहाविदूरे ।
निष्पन्दमस्मिन्नवलम्बितं स्यान्न संचरेत् सा समवायवृत्तिः ॥१३॥

यथा पटस्तन्तुषु मृद्घटो वा मृत्स्वेव तिष्ठत्यवलम्बमानम् ।
निष्पन्दरुद्धं न ततः पृथक् स्यान्न चाश्रयं हन्ति तथेह विद्यात् ॥१४॥

यथा गुणा द्रव्यगता अमुष्मिन् प्रतिष्ठिताः सन्त्यवलम्बिनस्ते ।
निष्पन्दरुद्धा न ततः पृथक् स्युर्न वाश्रयं हन्युरिहापि तद्वत् ॥१५॥

इहेदमस्तीति मतिः पृथक्त्वकाभावेऽपि चेत् सा समवायवृत्तिता ।
यथा प्रदीपेऽर्चिरुपैति, शाखिनो वने, सरस्यम्बु, भटाश्वमूगताः ॥१६॥

## २०–आसङ्गवृत्तित्वम् । संसर्गः [३]

बलस्य यस्यां रसवृत्तितायां बलेन लेपः पुरुषेऽत्र सिद्धयेत् ।
लेपाच्च तस्यावरणाद् विकारः स्यादात्मनः सा खलु सङ्गवृत्तिः ॥१७॥

यथाऽऽहितं सैन्धवखिल्यमप्सु व्याप्नोति ताश्चावृणुते विलिम्पत् ।
रूपाद्रसाद्वा विकरोति तोयं ह्यासक्तिवृत्त्यात्मबलं च तद्वत् ॥१८॥

यथा विशुद्धस्य पटस्य रञ्जनादन्तर्बहिस्तन्तुविकार ईक्ष्यते ।
तदङ्गलेपावरणात् तथात्मनो विकार आसक्तिवशेन जायते ॥१९॥

## २१–वृत्तित्वसंसर्गोदाहरणानि ।

पत्रेऽन्तरे या सुदृढास्ति लेखा मस्यादिक्लृप्ता च बहिर्दृढा या ।
छाया मयूखादिकृता च लेखा क्रमेण सक्तिः समवाय्युदारौ ॥२०॥

अर्थेऽनपेक्षे प्रभवत्युदारता प्रज्ञस्य नात्र स्मरणं न संस्क्रिया।
संस्कारभावे समवाय इष्यतेऽथासक्तिरस्य व्यसनेषु जायते ।।२१।।

यत्रायमभ्यस्यति गद्यपद्ये तत् संस्क्रियास्मिन् समवैति तद्वत्।
स्याद्धारणाध्यानसमाधियोगात् स संयमो योगबलानि चास्मिन् ।।२२।।

यज्ञप्रभावाद् यजमान आत्मा संपद्यते हि द्विविधस्तयोः स्यात्।
साँस्कारिकत्वात् समवाय इत्थं सर्वत्र सम्बन्धगतिं प्रविद्यात् ।।२३।।

## २२–कर्म्मात्मनि वृत्तित्वसंसर्गत्रयम्।

तत्रैककर्मात्मनि तस्य सक्तिरुदारवृत्त्यैव हि संनिधत्ते।
उदारसक्त्या हि परः स्वभावादाविश्य विश्वं स बिभर्ति नित्यम् ।।२४।।

कार्य्यप्रसूतिः समवायवृत्त्या द्वैकर्मिकत्वे समवायवृत्तिः।
ततोऽक्षरस्यैव तु कारणत्वं परस्य नैतत् समवायिभेदात् ।।२५।।

आसक्तिवृत्त्यैव भवेद् विकारो न त्वक्षरे नापि परे विकारः।
त्रैकर्मिके सक्त्युपपत्तितोऽयमसङ्ग आत्मा स परोऽक्षरश्च ।।२६।।

उदार एवं समवाय एवं व्यासक्तिरेवं त्विति वृत्तितेयम्।
त्रिधापि कर्म्मात्मनि कर्म्महेतोः प्रवर्तते शुद्धरसे तु नास्ति ।।२७।।

पर्य्याप्तिवृत्तित्वविशेषभेदाश्चतुर्विधः एवमिहोपदिष्टाः।
अतः परं पञ्च निदर्शयामोऽन्वाभक्तिवृत्तित्वविधा असर्गाः ।।२८।।

## २३–उदूढसम्बन्धभेदाः (संहिताः)।

भूतप्रतिष्ठं क्वचिदस्ति भूतं प्राणेन वा स्याद्विधृतं च भूतम्।
प्राणः क्वचित् प्राणधृतोऽथ वा स्यात् त्रेधा तदित्थं प्रभवत्युदूढम् ।।१।।

अन्योन्यतश्चेद्विधृतिस्तदेकं प्राणद्वयोर्दूढमिदं बलिष्ठम्।
प्राणस्य भूते विधृतिस्तु मध्यं भूतद्वयोदूढमिदं निकृष्टम् ।।२।।

यच्छर्कराचूर्णचयोस्ति तस्मिन् चूर्णानि भूप्राणविधारितानि।
अधःस्थचूर्णं तु तदूर्ध्वचूर्णं प्रतिष्ठितं नो विधृतं मिथस्तत् ।।३।।

ये चैकलोष्टे परमाणवः स्युस्तेषामणूनां हि परस्परेण।
प्राणाः उदूढा अथवैक्यमासक्त्याप्ता इहैते सयुजोऽणवः स्युः ।।४।।

यथा हि तैलं च जलं च योगेप्यमिश्रमन्योन्यगतं विभाति।
प्राणास्त्रयः प्रज्ञगताश्च तद्वत् तिष्ठन्त्युदूढाः सयुजोऽप्यमिश्राः ।।५।।

त्रयः समुद्रा यजुषामिहाग्निर्ऋचां महोक्थं च महाव्रतं तु ।
साम्नां त एते त्रिविधाः समुद्रा उद्गूढवृत्त्यैव सहस्थिताः स्युः ॥६॥

एवं तदेकैकसमुद्रमध्ये महान्ति चोक्थानि महाव्रतानि ।
ये चाग्नयः साकमुद्गूढवृत्त्या तानि स्थितान्यत्र परस्परेण ॥७॥

## २४–कोशाधानम् ।

अथान्तरिक्षोदर एष पृथ्वी बुध्नोस्ति कोशो वसुधानकोशः ।
द्यौरुत्तरं तस्य बिलं दिशस्तास्तत्स्रक्तयो विश्वमिदं हि तत्स्थम् ॥८॥

## २५–आरण्यकीयसंहिताभेदास्त्रिखण्डाः ।

उद्गूढसम्बन्ध इहोच्यते यस्तां संहितामाहुरिहैतरेयाः ।
अङ्गानि च त्रीणि वदन्ति तस्याः ससंहिते ह्युत्तरपूर्वरूपे ॥९॥

स्यात् पूर्वरूपं पृथिवी तथा द्यौः स्यादुत्तरं रूपमथैष वायुः ।
स्यात् संहितेत्याह तु शूरवीरो माक्षव्य आकाशमवैन्न वायुम् ॥१०॥

आगस्त्य इत्याह समानमेतद् द्वयं यदाकाशमथैष वायुः ।
इत्थं निरुक्तान्यधिदैवतं तान्यध्यात्ममप्येवमुदाहरन्ति ॥११॥

वाक् पूर्वरूपं मन उत्तरं स्याद् वागुत्तरं वा मन एव पूर्वम् ।
स्यात् संहिता प्राण इहेति माण्डूकेयः प्रपश्यत्यपि शूरवीरः ॥१२॥

या संहिता प्राणमनोवचोभिः सा प्रष्टिवाहाश्वरथेन तुल्या ।
उद्गूढमत्रैव समस्तमेतद्विश्वं क्वचित् संसरतीव नित्यम् ॥१३॥

## २६–शाकल्यसंहिताभेदाश्चतुःखण्डाः ।

अथैष शाकल्यमहर्षिरस्या अङ्गानि चत्वारि विविच्य वक्ति ।
यत्पूर्वरूपोत्तररूपसन्धिसन्धातृभिस्तानि पृथग् विभान्ति ॥१४॥

पृथ्वी तथा द्यौरथ वृष्टिरेवं पर्जन्य इत्थं त्वधिदैवतं तत् ।
अध्यात्ममप्येवमिदं वदन्ति यतोऽस्ति सर्वः पुरुषोऽयमान्दम् ॥१५॥

तस्याध ऊर्ध्वं विदले भवेतां तत्रोत्तरं द्यौरधरं तु पृथ्वी ।
तदन्तरं खं तु यथान्तरिक्षं प्राणस्त्विहामुत्र यथास्ति वायुः ॥१६॥

ज्योतींष्यपि त्रीणि यथा ह्यमुष्मिंस्तथैव चास्मिन् पुरुषेपि सन्ति ।
सूर्य्योऽस्ति चक्षुर्हृदयं तु विद्युद्रेतो ह्युपस्थेऽग्निरिवावभाति ॥१७॥

## २७–तारुक्ष्यसंहिता । सामसंहिताख्या ।

अथाह तारुक्ष्यमहर्षिरित्थं वागस्ति रूपं हि रथन्तरस्य ।
प्राणस्तु रूपं बृहतस्तयोः सन्धीयेत रूपेण हि संहितेयम् ॥१८॥

धातुर्द्युतानात्सवितुश्च विष्णोः रथन्तरं कश्चिदुदाजहार ।
धातुर्द्युतानात्सवितुश्च विष्णोरग्नेश्च कश्चिद् बृहदाचकार ॥१९॥

## २८–कौण्ठरव्यसंहिता । अवरोत्तराख्या ।

वाक्[१] प्राणतो[२]ऽसौ पवमानतो[३]ऽसौ विश्वैश्च[४] देवैरथ ते द्युलोकात्[५] ।
स ब्रह्मणे[६]त्याह तु कौण्ठरव्यो यां संहितां सा ह्यवरोत्तरा स्यात् ॥२०॥

पञ्चालचण्डस्तु महर्षिरेषा वाक्संहितेत्याह चराचराणाम् ।
वागेव सर्वं त्विदमस्ति वाचा सन्धीयतेऽन्योन्यमिदं समस्तम् ॥२१॥

छन्दांसि वेदा इतरे च सन्धीयन्ते हि वाचाऽस्त्यनया तदैक्यम् ।
वाचैव मित्राण्यपि सर्वभूतान्यमूनि वा संदधतीह सर्वे ॥२२॥

## २९–प्रतर्दनसंहिता । द्विखण्डा ।

प्रतर्दनः पश्यति यावदेष प्रभाषते प्राणिति नैष तावत् ।
यावत्तु स प्राणिति नैष तावत् प्रभाषतेऽन्योन्यतदाहुतिः स्यात् ॥२३॥

यत्र त्वधीतेऽप्यथ भाषते वा प्राणस्तदा वाचि तदैक्यमेति ।
तूष्णीं स आस्तेऽप्यथ यत्र शेते प्राणे तदा वागियमैक्यमेति ॥२४॥

एकः सुपर्णोऽस्ति समुद्रमध्ये स एव विश्वं भुवनं विचष्टे ।
विशुद्धदृष्टया तमपश्यमन्ते माता च तं लेढि स मातरं च ॥२५॥

## ३०–अदितिसंहिता चतुःखण्डा ।

प्रजापतिश्चादितिसंहिताया अङ्गानि चत्वारि पृथग् विवक्ति ।
जाया हि पूर्वं पतिरुत्तरं स्यात् सन्धानसन्धी जननप्रजे स्तः ॥२६॥

## ३१–तित्तिरिसंहिता । चतुःखण्डा ।

अङ्गानि चत्वारि च संहितायामाचक्षते तित्तिरयोऽपि तद्वत् ।
तत्पूर्वरूपोत्तररूपयुग्मं सन्धिश्च सन्धानमिति द्वयं च ॥२७॥

तत्पूर्वरूपं प्रतियोगि यत्स्यादथानुयोग्युत्तररूपमाहुः ।
तदन्तरे तिष्ठति यः स सन्धिः सन्धानमेतत् त्रयबन्धि सूत्रम् ॥२८॥

पृथ्वी तथा द्यौरिदमन्तरिक्षं वायुस्तथेति ध्रियतेऽधिलोकम् ।
अग्निस्तथादित्य इमास्तथापोऽधिज्यौतिषं वैद्युत इत्यवेहि ॥२९॥

आचार्यको माणवकश्च विद्याऽथाध्यापनं चेत्यधिविद्यमूह्यम् ।
अधिप्रजं तानि भवन्ति माता पिता प्रजाऽथो जननं क्रमेण ॥३०॥

अध्यात्ममेतान्यधराहनुर्योत्तराहनुर्यास्त्यथ वाक् च जिह्वा ।
इत्थं नु सर्वत्र चतुष्टयं तत् संभावयन्ति क्रमशो यथार्थम् ॥३१॥

## ३२-बाध्वसंहिता-एकायनसंहिताख्या ।

शारीरकश्छान्दस एष वैदिको महानपीत्थं पुरुषाश्चतुर्विधाः ।
अस्मिन् शरीरे निवसन्ति संहितां तत्रैष बाध्वोऽनुविधं समीक्षते ॥३२॥

शारीरको योस्त्यशरीर आत्मा स प्रज्ञ एकोस्ति रसः शरीरे ।
अकार एवास्ति रसः स आत्माऽभिप्रेयते छन्दसि वाङ्मयेऽपि ॥३३॥

येनैष वेदानिह वेद तस्य ब्रह्मा रसो वेदमये स आत्मा ।
संवत्सरोऽन्यः पुरुषो महानादित्यो रसस्तस्य मतः पुराणैः ॥३४॥

भूतानि पूर्वाणि विनाशयत्यैक्याभावयत्येष नवानि तानि ।
स एष संवत्सर एव देहे स्थितो महापूरुष उक्त आत्मा ॥३५॥

प्रज्ञात्मको वर्ष्मणि योऽशरीरो यश्चैष आदित्य इहैकमेतत् ।
ततो निरुक्तोऽखिलजङ्गमानां स स्थावराणामपि सूर्य्य आत्मा ॥३६॥

छन्दोगसंघा हि महाव्रतं ते विदुर्महोक्थेऽपि च बह्वृचास्तम् ।
अध्वर्यवोऽग्नौ च तमेव पृथ्व्यां विव्यन्तरिक्षे च तमेव वायौ ॥३७॥

तमप्सु पश्यन्ति तमोषधीषु वनस्पतिष्वाकलयन्ति चन्द्रे ।
सर्वेषु भूतेषु स एष आत्मा विभाति संवत्सरसंमितः सन् ॥३८॥

चक्षुर्मयः श्रोत्रमयो मनोमयश्छन्दोमयो वाङ्मय एष दृश्यते ।
तत्पूरुषे चापरपूरुषास्त्रयः प्रज्ञाभिधे ते निवसन्ति संहिताः ॥३९॥

## ३३-अध्याहिताध्यारूढवृत्तित्वे (दहरोत्तरत्वम् ।)

यत्र द्वयोरन्वितयोर्भवेतामन्योन्ययोगाद्दहरोत्तरत्वे ।
अध्याहितः स्याद्दहरस्तथाध्यारूढो भवेदुत्तर एष तत्र ॥१॥

प्रासादका आवसथे भवेयुः प्रासादगर्भे स्युरनेकशालाः ।
शालेयगर्भे च भवन्त्यगारा एवं भवेतां दहरोत्तरत्वे ॥२॥

संवत्सराः पञ्च युगे निविष्टाः संवत्सरे द्वादश सन्ति मासाः ।
त्रिंशद्दिनानि प्रतिमासमुक्तान्येवं भवेतां दहरोत्तरत्वे ॥३॥

संवत्सरे द्वे अयने निविष्टे तत्रापि पूर्वापरपक्षसंस्थाः ।
तत्राप्यहोरात्रमहोमुहूर्ता एवं भवेतां दहरोत्तरत्वे ॥४॥

बृहस्पतौ सूर्य्यसमन्वयेन यथैव कालावयवाः स्युरेवम् ।
सूर्य्येन्दुयोगात् स्युरिमे च पूर्व्येष्वेवं भवेतां दहरोत्तरत्वे ॥५॥

खे राशयो द्वादश सन्ति भानां प्रत्येकतो द्वादश राशयः स्युः ।
तत्रापि च द्वादशराशयः स्युरेवं भवेतां दहरोत्तरत्वे ॥६॥

यथाविभक्तग्रहदायपूर्णं समाः शतं विंशमिहान्तरेऽपि ।
एकैकदायो ग्रहदायपूर्णोऽस्त्येवं भवेतां दहरोत्तरत्वे ॥७॥

## ३४—दहरोत्तरत्वे दुःषमादिचतुर्विभागाः ।

अत्रोत्तरस्मिन् परमे तदन्तस्तदन्तरेऽन्यं दहरं प्रतीयात् ।
तद्दुःषमं वा सुषमं समं वा वैषम्यतो वा प्रथते चतुर्धा ॥८॥

यत्रान्तरन्तःस्थितमेकमेवानेकं समं वा विषमं कथञ्चित् ।
तत्र व्यवस्था यदि नास्ति रूपे तद्दुःषमं स्याद्दहरोत्तरत्वम् ॥९॥

एकत्र चानेकविभक्तिसंस्था पुनस्तथान्तः सुषमं तदा स्यात् ।
एकैकतुल्याकृतयोऽन्तरन्तः क्रमात्स्युरेतद्विषमं समं वा ॥१०॥

सामान्यमात्रं तु रसोस्ति सत्ताविशेषमात्राणि पराण्यणूनि ।
तयोः प्रयोगाद्दहरोत्तरत्वं त्वापेक्षिकं दुःषममेव विद्यः ॥११॥

वाक् सर्वमेतत्पृथिवी तदन्तस्तदन्तरे प्राणिशरीरमस्ति ।
तदन्तरे यद् हृदयं तु गायत्र्येषा चतुष्पादपि दुःषमं तत् ॥१२॥

संवत्सरे चेदृतवोऽथ मासाः पक्षा अहोरात्रविभक्तयो वा ।
ये चेतरे तत्र कृता मुहूर्तादयो विभागाः सुषमं तु यत्स्यात् ॥१३॥

रथन्तरं पूर्वमसृज्यताप्यतो बृहद् बृहत् तेन रथन्तरं हि तत् ।
वैरूपमासीद् बृहतो बृहत् ततो बृहच्च वैराजमभूद् बृहत्तरम् ॥१४॥

वैराजतः शाक्वरमग्रतोऽभवद् बृहत्तमं, तत्र च रैवतं मतम् ।
बृहन्ति च त्रीणि रथन्तराणि च त्रीण्येव पृष्ठानि भवन्त्यमूनि षट् ॥१५॥

रथन्तरात् कह्यपि नावसृज्यते वैरूपमस्मादपि शाक्वरं च तत् ।
न चैवमस्माद् बृहतोऽवसृज्यते वैराजमेवं किल रैवतं च तत् ॥१६॥

रथन्तराद्यास्त्रिवृतो हि वाचो यासां हि नाभिः पृथिवी प्रतिष्ठा ।
मनांसि तु त्रीणि बृहन्मुखानि नाभिप्रतिष्ठा तपनोऽस्ति येषाम् ॥१७॥

यद्रैवते शाक्वरमस्ति तस्मिन् वैराजमस्मिंश्च विरूपमस्मिन् ।
बृहच्च तस्मिंस्तु रथन्तरं यत् सर्वं तदेतद्विषमावलम्बि ॥१८॥

स्याद्रैवतेऽन्तर्निहितं समं यद्वैराजमत्रापि बृहत् समं स्यात् ।
स्याच्छाक्वरेऽन्तर्निहितं समं यद्वैरूपमत्रापि रथन्तरं स्यात् ॥१९॥

शुक्लेऽस्ति कृष्णं च कनीनिकास्मिन्नक्षणां समं तद्दहरोत्तरत्वम् ।
चर्मासृगादिष्वपि केचिदाहू रेतोऽवसानं तु यथा कथंचित् ॥२०॥

## ३५–त्रिपुष्करं ब्रह्मपुरम् ।

यो वै बहिर्धा पुरुषादयं महाकाशः स तावान् पुरुषेऽन्तराहितः ।
आकाश एवं हृदयेऽन्तराहितोऽप्याकाश उक्तो दहराभिधोऽपरः ॥२१॥

यैर्यैर्बहिः पुष्करमस्ति पूर्णं पूर्णं हि तैः पुष्करमान्तरं तत् ।
तैः पुण्डरीकं दहरं च पूर्णं त्रिपुष्करं ब्रह्मपुरं निराहुः ॥२२॥

वाक्प्राणचक्षुःश्रुतितो मनस्तत् प्रवर्तते यद्वदिदं चतुष्पात् ।
तथाग्निवायूष्णगुदिग्भिरूर्ध्वोऽप्याकाश एष प्रथते चतुष्पात् ॥२३॥

प्रज्ञं मनो ब्रह्मपदे यदुक्तं त्रिपुष्करेऽन्तर्निहितं तदस्ति ।
लोकी न लोकादिह भिद्यते यन्मनोयमाकाश इतीष्यते तत् ॥२४॥

मनः स आकाश इहेष्यते यः प्राणाः समस्ता इह संनिविष्टाः ।
आकाश एषोऽस्ति पुनर्निविष्टः परत्र विज्ञानमयेऽक्षरेऽस्मिन् ॥२५॥

## ३६–ओतप्रोतभावसम्बन्धः ।

भेवेदनुस्यूतमिवैकमन्यत्रासक्तिमच्चेत् प्रभवेऽनुबद्धम् ।
स्यात् कार्य्यसामान्यमिदं तदोतप्रोतं हि सामान्यतया स्वयोनौ ॥२६॥

सर्वं ह्यनुस्यूतमिवाप्सु वायौ ताः सन्ति गान्धर्वजनेषु तत् खम् ।
आदित्यचन्द्रर्क्षकदैवतेन्द्रप्रजापतिब्रह्म जनेष्वतः स्यात् ॥२७॥

ऊर्ध्वं दिवो यद् यदवाक् पृथिव्याः द्यावापृथिव्यौ च यदन्तरास्ति ।
भूतं भविष्यच्च भवच्च सर्वं यदस्ति तं प्राण इति ब्रुवन्ति ॥२८॥

तस्मिन् समस्तं जगदेतदोतं प्रोतं स चाकाशगतोऽयमोतः ।
प्रोतः स चाकाश इहाक्षरे स्यात् तस्मिन्ननुस्यूतमिदं समस्तम् ॥२९॥

## ३७—ग्रहातिग्रहसबन्धः ।

अध्यात्मिकानामधिभूतधर्मैरासंस्रवो येन निरूपितः स्यात् ।
स हि ग्रहातिग्रहभाव उक्तोऽध्यात्मं ग्रहोभूतमतिग्रहः स्यात् ॥३०॥
प्राणो ह्यपानेन च वाक् तु नाम्ना रूपेण चक्षू रसना रसेन ।
श्रोत्रं तु शब्देन मनस्तु कामैः स्पर्शेन तु त्वक् किल कर्मणा दोः ॥३१॥
ग्रहो गृहीतस्तदतिग्रहेणेत्यतिग्रहे संस्रवते ग्रहोऽसौ ।
इत्थं जरत्कारुसुतार्तभागप्रश्ने पुरोवाच स याज्ञवल्क्यः ॥३२॥

## ३८—अध्यूढसम्बन्धः ।

छन्दोमितानीह पदानि यानि तेष्वेव गेयानि निवेशितानि ।
प्रगीयतेऽध्यूढमिदं हि पद्ये गेयं तदध्यूढमिदं प्रविद्यात् ॥३३॥

## ३९—षड्विकल्पसम्बन्धः ।

स्वरूपसम्बन्धवशाच्च नित्यं वृत्तित्वसम्बन्धवशाच्च भूयः ।
रसे बलं सर्वविधं प्रदृष्टं ततो विकल्पान् षडिमानि होचुः ॥३४॥

[1] कर्म त्वकर्मस्थमकर्म [2] कर्मसद् [3] भिन्नद्वयं तत् [4] तदभिन्नमद्वयम् ।
[5] अकर्म भिद्येत न कर्म [6] भिद्यतेऽध्यासोऽमृते स्यादिति षड् विकल्पनाः ॥३५॥

[1] घटो मृदि स्यात् मृदियं [2] घटे स्याद् [3] भिन्नौ तु तौ वा [4] मृदियं घटो वा ।
[5] भिन्ना तु मृन्नैष घटस्तु भिन्नो [6] घटो मृदध्यस्त इतीव विद्यात् ॥३६॥

## ४०—सर्वविधसंसर्गत्यागान्मोक्षसिद्धिः ।

बले बलानां च रसे बलानां सम्बन्धभेदा य इहोपपन्नाः ।
त इत्थमष्टादशधा निरुक्तास्तेषां विमोकादपवर्गमाहुः ॥३७॥
बलस्वरूपेण रसोऽवभासते रसस्वरूपेण बलं प्रवाहि वा ।
नान्योन्यमन्योन्यविनाकृतं भवेन्न चान्यतोऽन्यद् भवति क्वचित् पृथक् ॥३८॥

संसृज्यते वा प्रतिसृज्यते वाऽनुसृज्यते वाप्यमृते स मृत्युः ।
सर्गः स मोक्षस्त्वमृताद्विमोको मृत्योः सखण्डस्य न चाखिलस्य ।।३६।।

मितस्य कस्यापि रसस्य मायाव्यपायतः संभवतीह मुक्तिः ।
न तेन सर्वस्य मितस्य मायामुक्तिः प्रकल्प्या प्रतिभावभेदात् ।।४०।।

कुतः स आत्मा कुत एव शक्तिः कुतश्च संसर्गविशेषसिद्धिः ।
कुतश्च सृष्टिक्रम इत्यमेतन्न वेद्मि तद् वेद्मि यथा यदस्ति ।।४१।।

।। इति पूर्णद्विसत्योपनिषद्ब्रह्मकर्म्मसम्बन्धाधिकारो द्वितीयः पूर्णः ।।

---

नोटः—द्रष्टव्य 'सम्बन्धतालिका' पृष्ठ ३१८ पर ।

सम्बन्धतालिका ।

| | | | | |
|---|---|---|---|---|
| १ | १ | स्थानविरोधः | असंसर्गौ २ | कर्म्मणि कर्म्मसम्बन्धाः ५ |
| २ | २ | सामञ्जस्यम् | | |
| ३ | ३ | ऐकात्म्यम् | संसर्गौ २ | |
| ४ | ४ | ऐकभाव्यम् | | |
| ५ | ५ | भक्तिः | असंसर्गः २ | |
| | | | | |
| ६ | १ | अलक्षणम् | असंसर्गः १ | ब्रह्मणि कर्म्मणां स्वरूप-सम्बन्धाः ४ |
| ७ | २ | विभूतिः | संसर्गाः ३ | |
| ८ | ३ | योगः | | |
| ९ | ४ | बन्धः | | |
| १० | १ | अमितवृत्तिता | असंसर्गः १ | ब्रह्मणि कर्म्मणां पर्य्याप्ति-वृत्तिताः ४ |
| ११ | २ | उदारः | ३ | |
| १२ | ३ | समवायः | | |
| १३ | ४ | आसङ्गः | | |
| | | | | |
| १४ | १ | संहिता | असंसर्गाः ५ | ब्रह्मणि कर्म्मणाम्-अन्वाभक्ति वृत्तिताः ५ |
| १५ | २ | दहरोत्तरभावः | | |
| १६ | ३ | ओतप्रोतभावः | | |
| १७ | ४ | ग्रहातिग्रहभावः | | |
| १८ | ५ | अध्यूढभावः | | |

## २–अथ ब्रह्मकर्म्मणोः सम्बन्धाधिकारः ।

### ब्रह्म और कर्म्म का सम्बन्धाधिकार प्रारम्भ--

### १–ब्रह्मकर्मणोरलौकिकसम्बन्धाधिकरणम् ।

### ब्रह्म और कर्म्म का अलौकिक सम्बन्धाधिकरण—

**[ हिन्दीविज्ञानभाष्य ]** विद्वान् मनुष्य सम्बन्ध को द्विनिष्ठ बतलाते हैं और उस सम्बन्ध में दोनों पदार्थों का व्यापार होता है। जिस प्रकार जब हम जल पर एक काष्ठ-खण्ड डालते हैं, उस समय जल में भी उस काष्ठ-खण्ड को धारण करने का व्यापार होता है। परन्तु यदि हम उसमें एक पत्थर डालें तो उसी समय वह जल के पैंदे में चला जाता है, क्योंकि पत्थर से जल की शक्ति कम है। अतएव मानना पड़ता है कि सम्बन्ध द्विनिष्ठ होता है और उसमें दोनों का ही व्यापार होता है। परन्तु प्रकृत में जो हम सम्बन्धगति बतलाने वाले हैं वह भिन्न ही प्रकार की है। यहाँ जो सम्बन्ध होता है–वह एकनिष्ठ ही समझना चाहिए और उसमें कृति (व्यापार) को कारण नहीं कह सकते। क्योंकि हमने ब्रह्म को निष्क्रिय बतलाया है, अतः उपर्युक्त द्विनिष्ठ सम्बन्ध यहाँ लागू नहीं हो सकता। जैसा कि गुरुवर श्री ओझा जी ने कहा है--

"सम्बन्धमाहुः कृतिनो द्विनिष्ठं तत्रोभयोरेव कृती भवेताम् ।
किन्त्वत्र सम्बन्धगतिर्विभिन्ना स एकनिष्ठोऽत्र कृतिर्न हेतुः" ॥१॥

हमने कर्म्म को आसक्तिस्वभावयुक्त बतलाया है। अतः यह कर्म्म उस ब्रह्म के साथ आसक्त रहता हुआ ही अपना स्वरूप संपादन करता है। अर्थात्–कर्म्म सदा ब्रह्म के साथ आसक्त ही रहता है–परन्तु ठीक इसके विपरीत ब्रह्म निरञ्जन है, अतः इसके साथ कर्म्म के आसक्त रहने पर भी इनका परस्पर बन्धभाव नहीं होने पाता। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"कर्म्मैतदासञ्जनमस्ति तस्मादासक्तमेवैतदुपैति रूपम् ।
निरञ्जनं ब्रह्म ततोऽत्र कर्म्म प्रसङ्गतोऽप्यस्ति न बन्धभावः" ॥२॥

जिसको कि हमने अब तक ब्रह्म कहा है–उसको ही हम रस नाम से कहते हैं एवं जिसको हमने कर्म्म कहा है–उसे ही हम बल नाम से पुकारा करते हैं। इन दोनों में से रस स्थिर है–शान्त है। इसी स्थिर एवं शान्त रस में बल प्रविष्ट हो रहा है, अतः बल के अनुरोध से हम रस को ही विश्व कहते हैं। अर्थात्–बल विना रस के रहता नहीं, अतः रस को विश्व कहते हैं। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यद् ब्रह्म तन्नाम रसं वदामो बलं वदामः पुनरत्र कर्म्म ।
रसः स्थिरस्तत्र बलं प्रविष्टं बलानुरोधाद् रस एव विश्वम्" ॥३॥

वही बल यत्नस्वरूप है एवं बल ही उस व्यापार का कारण है । इस प्रकार जो ही बल व्यापार है एवं जो ही बल कारण है–वही बल प्रयोग के लिए कैसे समर्थ हो सकता है ? जिस प्रकार कागज पर स्याही डाली जा सकती है–परन्तु कागज पर कागज क्या डाला जाय ? ठीक इसी प्रकार जो ही बल कारण है–वही बल प्रयोग में कैसे समर्थ हो सकता है ? अतः अयत्न एवं निर्हेतुक यह बल रस के साथ सदा आसक्त ही रहता है । क्योंकि यदि हम बल को रस से पृथक् मानकर फिर इसका मेल मानें तो इस मेल कराने वाले कारण को ढूंढना पड़ेगा । ऐसी अवस्था में ब्रह्म तो कारण हो ही नहीं सकता, क्योंकि वह निष्क्रिय है । ठीक इसी प्रकार बल को भी कारण नहीं बतला सकते, अतः ब्रह्म के साथ कर्म्म को सदा युक्त ही मानना पड़ता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है––

"बलं हि यत्नो बलमेव हेतुर्बलप्रयोगाय बलं कुतः स्यात् ।
अयत्ननिर्हेतुकमेतदस्मिन् रसे बलं नित्ययुतं स्थितं स्यात्" ॥४॥

इन ब्रह्म और कर्म्म में से जो कर्म्म है वह तो सम्बन्ध की अपेक्षा रखता है और जो ब्रह्म है–वह सम्बन्ध की अपेक्षा नहीं रखता । ऐसी हालत में ब्रह्म और कर्म्म का सम्बन्ध एक तरफा मानना पड़ेगा । इस प्रकार इस बल में रस उदासीनतया (निरपेक्ष) रहता है । अतएव बल के साथ रस कभी भी आसक्त नहीं होता–अपि तु, बल ही रस के साथ आसक्त होता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है––

"एकस्तु सम्बन्धमपेक्षते परो नापेक्षते तेन स एकतः कृतः ।
तिष्ठत्युदासीनतया बले रसो न सज्ज्यते सज्ज्यत एव तद्बलम्" ॥५॥

चूंकि--इस रस में बल नितान्त संबद्ध रहता है, अतएव यह बल रसात्मना प्रतिभासित होता है अर्थात्–इसी रस के कारण प्रतिक्षण नष्ट होने वाला बल भी हमें स्थायी दिखलाई पड़ता है, परन्तु रस बल के साथ कभी भी संबद्ध नहीं होता, अतएव जब रस इस बल से अलग हो जाता है तो उसी समय यह बल विलीन हो जाता है । यदि रस भी बल के साथ बँधा रहता तो यह बल रस से पृथक् हो ही नहीं सकता था । जैसा कि गुरुवर श्री ओझा जी ने कहा है––

"संबध्यते तत्र रसे बलं भृशं तेनेदमाभाति बलं रसात्मना ।
संबध्यते नैष रसो बले यतस्ततो रसोन्मुक्तमिदं विलीयते" ॥६॥

पूर्वोक्त बात का ही स्पष्टीकरण करते हैं–यदि रस भी बल के साथ बन्धन को प्राप्त हो जाय तो बल के नाश होने पर रस का भी नाश मानना पड़ेगा और इसी प्रकार बल के विकृत होने पर रस को

भी विकृत मानना पड़ेगा। परन्तु ऐसा होता नहीं है। न हम रस का नाश देखते हैं एवं न हम उसमें विकार देखते हैं, अतः मानना पड़ता है कि बल का रस के साथ सदा बन्ध रहने पर भी रस का बल के साथ कभी भी बन्धन नहीं होता। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"रसोऽपि चेत्तेन बलेन बन्धं यायात्तदा तस्य बलस्य नाशे।
रसोऽपि नश्येद्विकृते बले वा रसोऽपि तद्वद्विकृतोऽभविष्यत्" ॥७॥

इसी बात को दृष्टान्त द्वारा बतलाते हैं—

हम प्रत्यक्ष देखते हैं कि जो ही मिट्टी की सत्ता थी, वही घट की भी सत्ता है—अर्थात्—दो चीज होने पर भी सत्ता एक ही है और यदि घड़ा तोड़ दिया जाय तो वह मिट्टी की सत्ता में परिणत हो जाएगा यदि मिट्टी का भी नाश हो जाएगा अथवा मिट्टी के कारणभूत बलों का नाश हो जाएगा अथवा उस पदार्थ की यदि शून्यावस्था भी हो जाएगी तब भी उस सत्ता का (अस्तित्व व्यवहार का) कभी भी नाश नहीं हो सकता। जैसे कि घड़ा है—मिट्टी है—मिट्टी का अभाव है—घड़ा है—घड़ा नहीं 'है'। अर्थात्—सत्ता का नाश कभी भी नहीं होता। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"प्रत्यक्षमीक्षे तु मृदो घटस्य वा सत्ता किलैका, घटनाशतोऽपि सा"।
मृन्नाशतो वा बलनाशतोऽपि वा शून्यस्थिता सा न कदापि नश्यति" ॥८॥

जिस प्रकार घड़े के टूटने से—तदाकाश के विनाश की वासना—घटक्षयोपाधिकृता है—वस्तुतः उस घटाकाश का अब भी (घटनाश पर) नाश नहीं हुआ है, तथैव घट की सत्ता अलग थी—पट की अलग थी—मृत्तिका की अलग थी—सूत्र की अलग थी—यह जो वासना है, वह घटपटक्षयोपाधिकृता ही समझना चाहिए। वस्तुतः सत्ता सर्वत्र एक ही है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यथा घटाकाशविनाशवासना घटक्षयोपाधिकृता न वस्तुतः।
तथैव सत्ताविगमस्य धीरियं घटक्षयोपाधिकृता न वस्तुतः" ॥९॥

यदि घट के साथ सत्ता का बन्धन मान लिया जाय तो घट के नाश होने पर अवश्य ही उसका भी नाश हो जाए। परन्तु घटादि के नष्ट होने पर भी हम सत्ता का नाश नहीं देखते हैं, अतः मानना पड़ता है कि यह सत्ता-रस नित्य है—अनञ्जन है। इसी सत्ता-रस में सारे विश्व आसक्त हैं-परन्तु यह उनमें नहीं। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"घटेन सत्ता यदि बन्धमेयात् घटाप्ययेऽवश्यमिदं त्वपेयात्।
सत्ता रसो नित्यमनञ्जनोऽयं तत्रैव विश्वानि न तेषु सोऽयम्" ॥१०॥

इस प्रकार यह रस यद्यपि न कहीं बल में सम्बद्ध होता है और न कभी विकार को ही प्राप्त होता है तथापि इस रस में बल एकतरफा ही सम्बद्ध रहता है-अर्थात् जिस प्रकार अन्तरिक्ष में वायु सम्बद्ध रहता है परन्तु अन्तरिक्ष वायु से जरा सा भी संसर्ग नहीं रखता तद्वत् प्रकृत में भी समझना चाहिए। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"इत्थं रसो यद्यपि न क्वचिद्बले सम्बन्धमायाति विकारमेति वा।
तथापि तस्मिन् बलमेकतः सदा सम्बद्धमेव ध्रियतेऽन्तरिक्षवत्" ॥११॥

अब यहाँ से कर्म्मों में जो कर्म्मों का सम्बन्ध इष्ट है-वह भिन्न भिन्न प्रकार का है। उनके विवेक के लिए अलग अलग सम्बन्ध के उन भेदों को बतलाते हैं। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अथोदितः कर्मसु कर्मणां तु यः सम्बन्ध इष्टः स विभिन्नलक्षणः।
तयोर्विवेकाय पृथक् पृथक् पुनः सम्बन्धभेदानिह दर्शयाम्यहम्" ॥१२॥

——❀——

## २-कर्म्मणि कर्म्मसम्बन्धाः पञ्चविधाः।

### कर्म्म का कर्म्म के साथ सम्बन्ध पांच प्रकार का—

कर्म्म का कर्म्म के साथ सम्बन्ध-(१) स्थानावरोध, (२) समञ्जस, (३) ऐकात्म्यरूप, (४) ऐकभाव्यरूप एवं (५) भक्ति-इस क्रम से पाँच प्रकार का हुआ करता है। इन सम्बन्धों से कुछ विशेष प्रकार का सर्ग होता है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"कर्मान्वयः कर्मणि पञ्चधा स्यात् स्थानावरोधेन समञ्जसेन।
ऐकात्म्यरूपेण तथैकभाव्यरूपेण भक्त्या च विशेषसर्गः" ॥१॥

(१) स्थानावरोधसम्बन्ध को ही-धामच्छद सम्बन्ध कहते हैं। एक लोटे में यदि ऊपर तक जल भर दिया जाय तो फिर उसमें और जल नहीं भरा जा सकता, क्योंकि लोटे में स्थित जल ने स्थानावरोध कर रक्खा है। इसी प्रकार मिट्टी से पूर्ण लोटे में भी स्थानावरोध के कारण और मिट्टी नहीं डाल सकते, क्योंकि उपरोक्त दोनों स्थलों में स्थितिविरोध है। लकड़ी में एवं भींत में कीला रुपा हुआ देखकर (ऐसे स्थल में स्थितिविरोध नहीं मान सकते) इस प्रकार का स्थितिविरोधाभाव नहीं समझना चाहिए। क्योंकि स्थान के विशकलिताणुयुक्त रहने से-लकड़ी एवं भित्ति में उन अणुओं के हट जाने से कीला गड जाता है। अर्थात्-जब हम भींत में कीला गाडते हैं तो उसके परमाणु संकुचित हो जाते हैं। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"जलेन पूर्णे न जलं मृदा न मृत्स्थितेर्विरोधान्मणिके निवेश्यते ।
स्थानाच्छ्लथाणोरपसर्पणात् त्वसौ शङ्कुर्निखातः क्षितिभित्तिदारुषु" ॥२॥

(२)एक प्रकाशयुक्त घर में १००ओं दीपकों का प्रकाश समा जाता है–यही समञ्जस सम्बन्ध है । अर्थात् यहाँ एक का एक से विरोध नहीं है । यहाँ पर जो अनेक दीप हैं–उनका प्रकाश यद्यपि बहुत अवकाश को चाहता है–अर्थात्- एक दीप के प्रकाश की अवधि १०० गज तक है, परन्तु ऐसा होने पर भी एक ही मकान में-तद्देशावच्छेदेन ही–उन सब दीपकों का प्रकाश समा जाता है । अर्थात्–चाहिए उन प्रकाशों को बहुत बडा मैंदान परन्तु सामञ्जस होने से थोड़ी दूर में ही सबका प्रकाश समा जाता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"समञ्जसत्वात्तु गृहे प्रकाशे दीपप्रकाशाः शतमाभवन्ति ।
दीपेषु भूयस्स्वधिकावकाशाऽवगाहिभासोऽपि स देशवृत्तेः" ॥३॥

इसी प्रकार काच में एवं चक्षु के अल्प देश में–तेज एवं नाना प्रकार के रूप (वृक्ष-पर्वत-नदी-मनुष्यसमुदाय) नाना दिशाओं से आ करके–जो एक साथ ही बैठ जाते हैं । हम उन सब पदार्थों का एककालावच्छेदेन ही प्रत्यक्ष करने लगते हैं–यह समञ्जस सम्बन्ध कहा जाता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यद्दर्पणे चक्षुषि चाल्पदेशे तेजांसि रूपाणि पृथग्विधानि ।
दिग्भ्यः समागत्य पृथग्विधाभ्यः सहैव तिष्ठन्ति समञ्जसं तत्" ॥४॥

यदि किसी वस्तु को कोई मनुष्य बल से एक तरफ विचलित कर रहा है, ऐसी अवस्था में यदि ठीक इसके सीध में–विरुद्ध दिशा के बल का आश्रय यदि उस वस्तु में हो जाय तो उसी समय वह वस्तुस्थिर हो जाती है । ऐसी स्थिति में विरुद्ध दिशाओं से आने वाले बलद्वय को एककालावच्छेदेन वह पदार्थ भोगता रहता है । जैसे–एक रस्से पर एक पहलवान दक्षिण दिशा से एवं एक उत्तर दिशा से यदि बल प्रयोग करता है तो उसी समय वह रस्सा स्थिर हो जाता है । यहाँ पर दोनों के बलों को एक-कालावच्छेदेन वह रस्सा पी रहा है–यही समञ्जस सम्बन्ध कहलाता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"विचाल्यमानं हि बलेन केनचिद् विरुद्धदिग्लब्धबलान्तराश्रयात् ।
स्थिरीभवेत् तत्र विरुद्धदिग्भवं बलद्वयं तद् युगपत् सहाश्नुते" ॥५॥

(३) तीसरा–ऐकात्म्य सम्बन्ध बतलाते हैं । इस सम्बन्ध में शरीर (स्वरूप) दो रहते हैं और आत्मा एक बन जाता है । जिस प्रकार–लोहा अग्नि के सम्बन्व से एवं चूर्ण पानी के साथ मिलने से

एवं मिट्टी अग्नि द्वारा पकने से जो स्वरूप धारण करती है–वह ऐकात्म्य सम्बन्ध कहलाता है । क्योंकि लोहे के प्रत्येक परमाणु में आग घुस जाता है–इन दोनों का आत्मा एक हो जाता है–इसी प्रकार चूर्ण पानी से एवं मिट्टी अग्नि से मिल जाती है–यही ऐकात्म्य सम्बन्ध कहलाता है ।

(४) चौथा–ऐकभाव्य सम्बन्ध बतलाते हैं । इस सम्बन्ध में शरीर भी एक ही बन जाता है । तेज (ऑक्सिजन) के एवं अम्बु (हाइड्रोजन) परमाणुओं का यदि मेल हो जाय तो पानी के परमाणु पैदा हो जाते हैं–यहाँ दोनों से तीसरी चीज पैदा होती है । यही ऐकभाव्य सम्बन्ध कहलाता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अयोग्निना, चूर्णमथाम्बुना, धृतेरैकात्म्यमायाति, मृदग्निपाचिता ।
तेजोम्बुनोस्ते परमाणवो नवं जलाणुभावं जनयन्ति योजिताः" ॥६॥

(५) पाँचवां–भक्ति सम्बन्ध कहलाता है । दोनों दिशाओं में जड़ी हुई कीलों से दोनों प्रान्त भागों से बँधा हुआ जो अत्यन्त निर्बल सूत्र है–उसमें उस डोर से कहीं बलिष्ठ जो ढके हुए वस्त्रादि हैं–उस वस्त्र के रोओं का जो बल सूत्र में आ गया है–वह खूंटी की भक्ति का बल समझना चाहिए एवं खूंटी में–भित्ति की भक्ति का बल समझना चाहिए । एक सूत्र पर यदि हम धोती सुखावेंगे तो फौरन वह सूत्र नीचे गिर जाएगा । परन्तु उसी सूत्र को यदि हम खूंटियों से बाँध देंगे तो वह उस धोती को आसानी से अपने ऊपर ले लेता है । यह उसमें भित्ति का भक्तिबल समझना चाहिए । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अनिर्बले दिग्द्वयभित्तिकीलावलम्बितप्रान्तयुगे तु सूत्रे ।
सूत्राद्बलिष्ठं ध्रियतेऽवलम्ब्यं वस्त्रादि तद्भित्तिबलस्य भक्त्या" ॥७॥

एक बडे भारी उन्नत एवं वजनी किंवाड़ को–जो कि नीचे रखा हुआ–५० मनुष्यों से भी नहीं उठ सकता, उस किंवाड़ को एक छोटा सा दुबला-पतला आदमी बन्द कर देता है एवं वही किंवाड़ एक छोटी सी कंकरी से एवं कील से रुक जाता है । यहाँ–उस अबल (मनुष्य–लोष्ट कील) को प्रबल (पृथिव्यादि) का भक्त (आश्रय) समझना चाहिए । यद्यपि यह मनुष्य एवं लोष्टादि किंवाड़ के एक देश में ही क्रिया करते हैं–परन्तु सारा ही किंवाड़ रुक जाता है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"महोन्नतं चापि महाबलिष्ठं कपाटमावर्तयते कृशोऽपि ।
लोष्टेन कीलेन च रुद्ध्यते तत् तत्राबलं तत् प्रबलस्य भक्तम्" ॥८॥

एक मनुष्य यद्यपि अत्यन्त दुर्बल है तथापि वह राजाज्ञया अत्यन्त बलशाली बडे बडे मनुष्यों पर भी आक्रमण कर देता है अथवा–उस राजा के न्याय एवं सिद्धान्त के जो विरोधी हैं–उन पर जो

आक्रमण कर देता है-वहाँ पर-इस निर्बल मनुष्य को प्रबल राजा का भक्त मानना पड़ता है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यो दुर्बलोऽप्येकजनो बलिष्ठान् राजाऽऽज्ञयाऽऽक्रामति भूयसोऽपि।
तन्न्यायसिद्धान्तविरोधिनो वा तत्राबलं तत् प्रबलस्य भक्तम्" ॥९॥

पालकी में बैठा हुआ राजा-उस पालकी की भक्ति के आश्रित होता हुआ पालकी की गति के क्रम से नहीं जाता हुआ भी जा रहा है। यही भक्ति सम्बन्ध है। इस प्रकार-कर्म्म कर्म्म के इन पाँचों सम्बन्धों में से स्थानावरोध सम्बन्ध को ही प्रधान माना है। जैसा कि गुरुवर श्री ओझा जी ने कहा है-

"गच्छत्यगच्छन् शिविकास्थितो नरस्तद्भक्तिभूतः शिविकागतिक्रमात्।
इतीदृशे पञ्चविधेऽपि वान्वये स्थानावरोधोऽभिमतः प्रधानतः" ॥१०॥

परन्तु कर्म्म का ब्रह्म के साथ जो सम्बन्ध है-वह स्थानावरोध के लिए कभी भी उपपन्न नहीं होता है। इस पूर्ण रस में-अपूर्ण बल है, इसलिए उस ब्रह्म के साथ यह कर्म्म तादात्म्यरूपेण रहता है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यः कर्मणो ब्रह्मणि संभवो न स स्थानावरोधाय कदापि जायते।
पूर्णे रसेऽपूर्णबलं यतस्ततस्तादात्म्यरूपेण युनक्ति सर्वतः" ॥११॥



**३-ब्रह्मणि कर्म्मसम्बन्धास्त्रयोदशविधाः।**
**ब्रह्म और कर्म्म के-१३ प्रकार के सम्बन्ध—**

ब्रह्म और कर्म्म निरन्तर रहने वाले दो पदार्थ हैं। इसी प्रकार इन दोनों के सम्बन्ध का उदय भी निरन्तर ही होता रहता है। परन्तु-इनके दो होने पर भी यह विशिष्टाद्वय है-अर्थात्-एक से एक जुदा नहीं होते। इसी प्रकार निरन्तर यह सम्बद्धरूप को ही धारण किए रहते हैं। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"शश्वद्धिते ब्रह्म च कर्म्म च द्वे तयोश्च सम्बन्ध उदेति शश्वत्।
द्वयं विशिष्टाद्वयमेतदेवं सम्बद्धरूपं ध्रियतेऽपि शश्वत्" ॥१॥

इस प्रकार रस में बल के साथ जो सम्बन्ध हैं-वे कुल १३ प्रकार के हैं। अब हम उन्हीं को बतलाते हैं-(१) अलक्षण, (२) विभूति, (३) योग, (४) बन्ध, (५) अमितवृत्तिता, (६) उदारवृत्तिः जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"सम्बन्धभेदास्तु रसे बलस्य त्रयोदशाहुः किल तान् वदामः ।
अलक्षणं चाथ विभूतियोगौ बन्धोऽमिता वृत्तिरुदारवृत्तिः" ।।२।।

(७) समवायवृति, (८) आसङ्गवृत्ति, (९) अध्यूढसम्बन्ध, (१०) सन्धिसम्बन्ध, (११) दहरोत्तरत्वसम्बन्ध, (१२) ओतप्रोतत्वसम्बन्ध, (१३) ग्रहोद्ग्रहत्वसम्बन्ध । इस प्रकार ब्रह्म और कर्म्म के ये ही १३ प्रकार के सम्बन्ध होते हैं । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"स्यात्सप्तमीयं समवायवृत्तिरासङ्गवृत्तिः पुनरष्टमी स्यात् ।
अध्यूढसन्धी दहरोत्तरत्वौतप्रोतभावौ च ग्रहोद्ग्रहत्वम्" ।।३।।



### ४–त्रयोदशविधानां सम्बन्धभेदानां स्वरूपवृत्तित्वाभ्यां विभागः ।

### तेरह प्रकार के सम्बन्ध-भेदों का स्वरूप एवं वृत्ति से विभाग बतलाना—

ये १३ प्रकार के सम्बन्ध परस्पर बदलते रहते हैं अर्थात् इन सम्बन्धों में परस्पर सांकर्य हुआ करता है । इस प्रकार इन सम्बन्धों का जो परिवर्तन है–वह न तो आकस्मिक होता है–न किसी फल को उद्देश्य करके होता है–न किसी इच्छा से होता है, अपि तु–इनके विपर्य्य में स्वभाव ही कारण है । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अन्योन्यमेते परिवर्त्तिताः स्युस्तेषाममीषां परिवर्तनं यत् ।
आकस्मिकं तन्न फलान्न कामात् स्वभाव एवात्र परं निदानम्" ।।४।।

स्वरूप सम्बन्ध–१–अलक्षण, २–विभूति, ३–योग एवं ४–बन्ध–इस क्रम से ४ (चार) प्रकार का है । इसी प्रकार वृत्तित्वसम्बन्ध भी अमितवृत्तिता-सम्बन्ध से ले कर ग्रहोद्ग्रहत्व-सम्बन्ध तक क्रमशः ९ प्रकार का है । इन नो (९) में से भी पर्य्याप्तिवृत्तित्वसम्बन्ध १–अमितवृत्तिता, २–उदार, ३–आसङ्ग एवं ४–समवाय–इस क्रम से ४ प्रकार का है एवं अन्वाभक्तिवृत्तित्व सम्बन्ध भी १–सन्धि, २–दहरोत्तरत्व, ३–ओतप्रोतत्व, ४–ग्रहातिग्रहत्व एवं ५–अध्यूढत्व–इस क्रम से ५ (पाँच) प्रकार का है । इस प्रकार ये १३ सम्बन्धस्वरूप-पर्य्याप्तिवृत्तित्व एवं अन्वाभक्तिवृत्तित्व में बँटे हुए हैं । जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"स्वरूपसम्बन्धविधाश्चतस्रो वृत्तित्वसम्बन्धविधास्ततोऽन्याः ।
पर्य्याप्तवृत्तित्वविधाश्चतस्रोऽन्वाभक्तिवृत्तित्वविधास्तु पञ्च" ।।५।।

पुरुष और प्रकृति (रसबल) का यह स्वरूपसम्बन्ध, उद्भाव कर व्यक्त कराने वाला है। अर्थात्-हम इसी स्वरूपसम्बन्ध के कारण इस पुरुष प्रकृति का प्रत्यक्ष कर सकते हैं। पश्चात् जो पर्य्याप्ति-वृत्तित्वसम्बन्ध है, वह रसबल का आयोजक (पूर्णसम्बन्ध कराने वाला) बनता है। जैसे पूर्णवस्तु से-पूर्ण का सम्बन्ध कर दिया-यह पर्य्याप्तिवृत्तित्वसम्बन्ध कहलाएगा। परन्तु जो दो वस्तुओं की सन्धि (मिलाने) का हेतु है-वह अन्वाभक्तिवृत्तित्व सम्बन्ध होता है। बस, विना इस स्वरूपसम्बन्ध के एवं पर्य्याप्तिवृत्तित्वसम्बन्ध के इस रसबल का प्रत्यक्ष नहीं कर सकते-जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"उद्भावकं स्यात् पुरुषप्रकृत्योः स्वरूपमायोजकमेतयोः स्यात्।
पर्याप्तिवृत्तित्वमथैवमन्वाभक्तिस्तु पुंसोरिह सन्धिहेतुः" ॥६॥

जिस समय रस में-पेट में मृत्यु छिप (लीन हो) जाता है-तब हम उसे स्वरूपसम्बन्ध कहते हैं, क्योंकि इस समय वह ब्रह्म का ही स्वरूप बन गया है। परन्तु जब दोनों अलग-अलग रहते हैं, तब उसे वृत्तित्वसम्बन्ध कहने लगते हैं। जैसा कि गुरुवर श्री ओझा जी ने कहा—

"अन्तः प्रवेशादविविक्ततायां स्वरूपसम्बन्ध इति प्रसिद्धिः।
विविक्तभावेन तयोः प्रतीतौ वृत्तित्वसम्बन्धमुदाहरन्ति" ॥७॥



**५-तेषां पुनः संसर्गासंसर्गाभ्यां विभागः।**

**फिर-इन्हीं सम्बन्धों का संसर्ग एवं असंसर्ग से विभाग-**

यदि दो को मिलकर किसी अपूर्व वस्तु की सृष्टि हो तो उसे संसर्गसम्बन्ध एवं समन्वय-सम्बन्ध कहते हैं। यह संसर्गसम्बन्ध ६ प्रकार के होते हैं और असंसर्गसम्बन्ध सात (७) प्रकार का अन्य होता है-जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अपूर्वसृष्टिर्यदि चेदुभाभ्यां संसर्ग उक्तः स समन्वयोऽपि।
षडत्र संसर्गविधाः स्युरेवं सप्तत्वसंसर्गविधाः स्युरन्याः" ॥१॥

बन्ध-योग-विभूति। आसङ्ग-उदार एवं समवाय-ये ६ संसर्गसम्बन्ध होते हैं। इनमें से आदि के तीन स्वरूपसंसर्ग एवं अन्त के तीन पर्य्याप्तिवृत्तित्व संसर्गनाम से क्रमशः कुल संसर्गसम्बन्ध ६ प्रकार का होता है-जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"बन्धश्च योगश्च विभूतिनामाऽऽसङ्गोऽप्युदारः समवाय इत्थम्।
त्रिधा स्वरूपं त्रिविधा च वृत्तिः संसर्गसम्बन्धविधाः षडेताः" ॥२॥

अलक्षण–अमितवृत्तिता-अध्यूढ-ग्रहातिग्रहभाव-ओतप्रोतभाव-दहरोत्तरभाव-सहिता (सन्धि)–इन सातों से न सृष्टि होती है और न मोक्ष ही होता है, अतः ये सब सातों असंसर्गसम्बन्ध कहलाते हैं–जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"अलक्षणे चामितवृत्तितायामध्यूढसन्ध्यादिकपञ्चके च ।
न सर्गक्लृप्तिर्न च मोक्षक्लृप्तिस्तस्मादसंसर्गविधाः स्युरेताः" ।।३।।



### ६–स्वरूपसंसर्गाणां वृत्तित्वसंसर्गाणां च परिभाषा ।
### स्वरूपसंसर्ग एवं वृत्तित्वसंसर्ग की परिभाषा—

शुद्ध एवं शान्त–रसमय ब्रह्म में बल उत्थित होता है एवं गिरता हुआ फिर उसी में लीन हो जाता है। फिर उसी में से उत्पन्न होता है–फिर यह बल ब्रह्मस्वरूप में ही लीन हो जाता है। फिर यह बल उसी में से उठता है। यह जो बल का सम्बन्ध है–वह वृत्तित्वसम्बन्ध कहलाता है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"बलं रसे ब्रह्मणि चोत्थितं पतन्निलीयते तत्र पुनर्विजायते ।
तत्र स्वरूपेण निलीयते पुनः समुत्थितं वृत्तितयाऽनु सज्जते" ।।४।।

जिस शान्तरस में बल का उदय होता है–वहाँ पर इस बल और रस का संसर्गसम्बन्ध नहीं कहा जा सकता, क्योंकि संसर्ग बाहरी चीज के आकर मिलने का नाम है–यहाँ तो इसी रस में से यह बल उठा है। परन्तु बलान्तर से उपहित जो रस है (बलवद् रस) वह यदि रसान्तर से उपहित रसवद्-बल से यदि संसर्ग करे तो यह अवश्य संसर्गसम्बन्ध हो गया। जैसे एक लोटे में–शुद्ध पानी है और एक में रंग घुला हुआ है। चूँकि यहाँ पर विजातीय बल है, अतः इनके मेल को हम संसर्गसम्बन्ध कहेंगे–जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यत्रोदयं याति बलं तु तद्रसे संसर्ग एतस्य विधीयते नहि ।
बलान्तरेणोपहिते रसान्तरे बलान्तरं याति समन्वयः स हि" ।।५।।

परन्तु ठीक इसके विरुद्ध रसवद् बल का–बलवद् रस के साथ संसर्ग होने पर भी यदि वह-बल विजातीय नहीं है तो ऐसी स्थिति में रस-रस में मिल जाएगा और बल-बल में, अतः दोनों के एक होने से यहाँ संसर्गसम्बन्ध हटकर स्वरूपसम्बन्ध हो जायगा। जैसे–एक मणिक में शुद्ध जल है। बस, इसी में दूसरे शुद्ध जल को डाल दें तो वहाँ उस पानी-पानी का स्वरूप एक ही बन जाएगा, अतएव पानी में पानी डालने से कोई यह नहीं कहता कि पानी में पानी मिला हुआ है–परन्तु ठीक इसके विपरीत

रंग डालने से फौरन रंग युक्त पानी का व्यवहार होने लगता है, अतः सजातीय बल में स्वरूपसम्बन्ध ही होता है, परन्तु विजातीय सम्बन्ध में तो वृत्तित्व सम्बन्ध ही होगा-जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"रसो रसेनैक्यमुपैति चेद्बलं बलेन भूयोऽप्युभयं यदेकताम् ।
तदा स्वरूपं प्रथते ततोऽन्यथा वृत्तित्वमेवेति मुहुर्विचिन्त्यताम्" ।।६।।

जिन वस्तुओं में जो एक स्वाभाविक बल की धारा चल रही है-उसका उपमर्दन करके अथवा अनुपमर्दन कर के यदि उसमें और बल-प्रवाह का योग किया जाए तो वह संसर्गसम्बन्ध कहलाएगा। जैसे-लकड़ी में एक प्रकार का बल चल रहा है-उसका अग्नि द्वारा हमने उपमर्दन कर डाला-यहाँ जो अग्नि का सम्बन्ध काष्ठ से है-वह संसर्ग सम्बन्ध कहलाएगा। इसी प्रकार मिट्टी में जो एक स्वाभाविक बल धारा चल रही है-उस को न हटाकर जो मुष्टयादि से बलप्रयोग किया जाता है-यह भी संसर्ग-सम्बन्ध ही कहलाता है। गुरुवर श्री ओझा जी ने कहा है—

"बलप्रवाहं प्रथमप्रवृत्तं यदोपमर्द्यानुपमर्द्य वाऽस्मात् ।
प्रवर्ततेऽन्यः प्रबलः प्रवाहः संसर्गसम्बन्धगतिस्तदा स्यात्" ।।७।।

—*—

**७—अलक्षणमसंसर्गः स्वरूपसम्बन्धः ।**

**अलक्षण असंसर्ग—स्वरूपसम्बन्ध—**

उपरोक्त प्रकरण में जो हमने रसबल का स्वरूपसम्बन्ध बतलाया है, वह दो या तीन प्रकार का समझना चाहिए। रस के पेट में मृत्यु का सो जाना और अमृत का मृत्यु को खा जाना एवं मृत्यु का अमृत को खा जाना। जिस समय रस के पेट में बल (मृत्यु) सो जाता है-उस हालत में यह बल रस-स्वरूप में परिणत हो जाता है। परन्तु इसी सम्बन्ध से रस कभी भी बलस्वरूप में परिणत नहीं होता। अर्थात्-मृत्यु के रसाभ्यन्तर होने से यह भले ही रसरूप बन जाय, परन्तु रस अब भी मृत्यु से बेलाग ही है। इसी का स्पष्टीकरण करते हुए गुरुवर श्री ओझा जी ने कहा है—

"स्वरूपसम्बन्धगतिर्द्विधा स्यान्मृत्युप्रसुप्त्याऽमृतमृत्युभुक्त्या ।
स्वापे बलं स्यात्तु रसस्वरूपं बलस्वरूपस्तु रसो न तेन" ।।८।।

स्वभाव से ही यह रस न सो कर उठता है और न सोता है। क्योंकि-जागना तो सोने की अपेक्षा रखता है। चूंकि रस कभी सोता नहीं, इसलिए इसका जागना भी नहीं हो सकता। बस, यही कारण है कि रस कभी भी बलस्वरूप में परिणत नहीं होता। परन्तु बल ठीक इसके विपरीतधर्म्मा है। वह

सोता भी है, जागता भी है। अतः जब इसकी सुप्तावस्था होती है तब यह रस स्वरूप में परिणत हो जाता है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"सुप्त्वा न जागर्ति रसो न शेते ततो रसो नास्ति बलस्वरूपः।
जागर्ति निद्राति बलं ततस्तत् सुप्तं भवत्येव रसस्वरूपम्" ॥९॥

अतएव जिस समय बल रस में सोता हुआ रहता है, तब वह स्वरूप (रसरूप) एवं अलक्षण कहलाने लगता है। ऐसी स्थिति में सर्ग क्रिया सर्वथा बन्द रहती है। परन्तु इसके विपरीत यदि अमृत मृत्यु को खा जाय अर्थात् मृत्यु की सुषुप्ति तो हो नहीं और भुक्ति हो जाए, वहाँ आत्मसृष्टि हो जाती है। क्योंकि यहाँ पर रसप्रधानतया बल की ही भुक्ति मालूम होती है। इसी प्रकार यदि मृत्यु अमृत को खा जाय तो जगत् सृष्टि होने लगती है, क्योंकि यहाँ रस की भुक्ति है अर्थात् जगत् में बल ही बल दृष्टि-गोचर होता है, अतः मानना पड़ता है कि यहाँ रस की भुक्ति है। इस प्रकार एक (१) रस में बल की सुप्ति से असर्ग एवं रस में बल की मुक्ति से (२) आत्मसर्ग एवं (३) बल में रस की मुक्ति से जगत्-सर्ग समझना चाहिए। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"प्रस्वापतो यत्र भवेत् स्वरूपमलक्षणं तन्न च तत्र सर्गः।
अन्योन्यभोगात्तु तयोः स्वरूपे समन्वयोऽस्तीह ततोऽस्ति सर्गः" ॥१०॥

—❀—

### ८—अलक्षणसम्बन्धोदाहरणानि।

#### अलक्षण-सम्बन्ध के उदाहरण—

जिस प्रकार हमारे पैरों में चलने के लिए बल मौजूद है हाथ में क्षेपण का बल मौजूद है—इसी प्रकार, मुख में बोलने का बल मौजूद है। इस प्रकार सभी इन्द्रियों में तत्-तद् बल के रहने पर भी हम निरन्तर ही इनमें कार्य्य होता नहीं देखते—बस, इसी को अलक्षणबल कहते हैं, क्योंकि यहाँ बल रस में सूता (सोया) हुआ है। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

"यथास्ति पादे गतये बलं करे तत्क्षेपणायास्ति बलं तथा मुखे।
वक्तुं बलं किन्तु न सर्वदा ततः कार्य्याणि लोके, तदलक्षणं बलम्" ॥१॥

जिस प्रकार इस बीज में क्रमशः सूर्य्यादि के रस को निरन्तर खैंच कर वृक्षाङ्कुरोत्पत्ति के लिए एवं स्कन्धशाखाविटपादिभूति के लिए आज भी यह सारा बल मौजूद है, परन्तु यह बल अलक्षण कहलाता है, अतः जब तक पानी का सम्बन्ध इसके साथ न किया जाए, तब तक यह बल अलक्षण ही कहलाएगा। जैसा कि गुरुवर श्री ओझा जी ने कहा है—

